श्रीआत्मानन्द-ग्रन्थरत्नमाला-द्विचत्वारिंशं रत्नम् (४२)

न्यायविशारदन्यायाचार्यश्री.यशोविजयवाचकपुङ्गवसङ्कलितंपौर्णिमागच्छीयश्रीमद्भावप्रभसूरिकृतलघुवृत्तिसमेतम्

# प्रतिमाशतकम् ।



न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीशोपदिष्ट-'वालुकड' ग्राम-वास्तव्य-शाह-गोविन्दजी-विठ्ठलदास-इत्यस्य श्राद्धस्य द्रव्यसहाय्येन

प्रकाशयित्री-भावनगरस्था-श्रीजैनआत्मानन्दसभा.

इदं पुस्तकं भावपुरे वल्लभदास-त्रिभुवनदास-गांधी-सेक्रेटरी-श्रीजैनआत्मानन्दसभा भावनगर-इत्यनेन विद्याविजयमुद्रणालयाधिपति गीगाभातृ-तनूज-पुरुषोत्तमदास द्वारा मुद्रयित्वा प्राकाश्यं नीतम् ।

वीरसंवत् २४४१. आत्मसंवत् २०. विक्रमसंवत् १९७१.



॥ अर्हम् ॥

## ॥ अथ प्रस्तावना ॥

त्रिभुवनान्तर्वर्त्तिसकलसुरासुरनराधीशार्चितश्रीमद्भगवदर्चान्यासवन्धुरस्य प्रतिमाशतकनामधेयस्यास्य ग्रन्थस्य के कर्त्तारः? किमर्थं ग्रन्थोऽयं ग्रथितः ? कदा गुम्फितश्च ? इति जिज्ञासायां जातायां—

ग्रन्थोऽयं जन्मजरामरणरोगशोकादिविपात्तिधूमध्वजैर्दंदह्यमानानां सत्वानां श्रीमदार्हतीयप्रवचनोपनिषत्सुधारसैकपरिषिक्तमानैः, अनेकतर्कप्रमाणनयनिक्षेपादिशास्त्राभ्यासवशात् बुधजनार्पितन्यायविशारद–न्यायाचार्य–विरुदद्वयैः, तपगणगगनाङ्गणदिनमणिप्रगल्भाभिभवसुरगुरुअकबरसुरत्राणप्रतिबोधकसूरिपुरन्दरश्रीहीरविजयाभिधेयसूरीश्वरा अभूवन् , तच्छिष्या यतिकोटीमौलिकोटीरकल्पश्रीकल्याणविजयास्तेषां छात्रा जान्हवीभुवनविमलधियो लाभविजयविबुधास्तदन्तेवासिनः सनया नयविजयप्राज्ञास्तेषां विनीतविनेयैः, श्रीमद्यशोविजयवाचकपुङ्गवैः जिनार्चालुम्पकलुम्पकमतिनागवागुरायां मा पतत्विति धिया भवभयोद्विग्नपरमानन्दसन्दोहाभिलाषुकजन्तूनामुपकृत्यर्थं,

जिनागमोत्तीर्णमतीनां वसनखण्डबद्धास्यानां ढुण्ढकानां समुद्धरणार्थं च वैक्रमीयाष्टादशशताब्द्यां प्रथितः।

कुमतोन्मत्तेभोन्मूलनकण्ठीरवाणां एतेषां वाचकवर्य्याणां न्यायविशारदपदं न्यायाचार्यपदं च कुत्र कैः समर्पितं ? इति सम्यग् विचारे जायमाने —

"पूर्वं न्यायविशारदत्वबिरुदं काश्यां प्रदत्तं बुधैः, न्यायाचार्यपदं तत कृतशतग्रन्थस्य यस्यार्पितम् ।"

एतेन वाराणस्यां मनीषिभिर्बिरुदद्वयं पूज्यानां समर्पितमितिस्वकृततर्कभाषाप्रशस्तिगनेन प्रान्त्यार्द्धश्लोकोल्लेखेनावसीयते ।

ग्रन्थस्यास्योपरि श्रीमन्महोपाध्याययशोविजयवाचंयमपुङ्गवैः स्वोपज्ञबृहद्वृत्तिः प्रणीतास्ति, तदनुसृत्या पौर्णिमागच्छप्रधानैः मातृकाप्रकरण-नयोपदेशावचूर्यादिग्रन्थप्रणेतृभिः श्रीमद्भिर्भावप्रभसूरिभिर्वैक्रमीयत्रिनवत्युत्तरसप्तदशशत [१७९३] वर्षे इयं लघुवृत्तिः सङ्कलितास्ति—

यदाह—

" सूरिभावप्रभेणास्यां, तेनानाभोगतो मया । वृत्तौ पृथक्कृतायां यत्, तच्छोध्यं विबुधैरसत् ॥१॥

त्र्यंकाश्वभूमिते [१७९३] वर्षे, माघशुक्लाष्टमी तिथौ । वारे देवगुरौ जाता, पूर्णेयं वृत्तिरुत्तमा ॥२॥ "

इति प्रस्तुतग्रन्थवृत्तिप्रशस्त्यन्तर्गतेनैतद्वृत्तद्वयेन वृत्तिनिर्माता वृत्तिनिर्माणसमयश्च प्रतीत एव ।

निष्प्रतिमप्रतिभाशालिभिरेभिर्वाचकपूज्यैरन्येऽपि–नयोपदेश–अध्यात्मसार–अध्यात्मोपनिषद्–अध्यात्मिकमतखण्डन–अध्यात्म-

मतपरीक्षा–नयरहस्य–नयप्रदीप–न्यायालोक–जैनतर्कभाषा–ज्ञानबिन्दु–न्यायखण्डखाद्य –मार्गपरिशुद्धि–उपदेशरहस्य–वैराग्यकल्पलता–ज्ञानसाराष्टक–देवधर्मपरीक्षा –धर्मपरीक्षा–यतिलक्षणसमुच्चय–गुरुतत्वनिर्णय–सामाचारी–भाषारहस्य–द्वात्रिंशद्द्वात्रिंशिका–अध्यात्मोपदेश–स्याद्वादरहस्य–ज्ञानार्णव–विचारबिन्दु–आत्मख्याति–सिद्धांततर्क–परिष्कार–अनेकान्तमतव्यवस्था—कर्मप्रकृतिवृत्ति—शास्त्रवार्त्तासमुच्चय-वृत्ति–षोडशकवृत्तीत्याद्यनेके कृता ग्रन्थास्सुप्रसिद्धा एव ।

तथा प्राकृतसत्त्वसङ्घातोपकृत्यर्थं गुर्जरगिरायामपि श्रीमद्वीतरागदेवस्तुतिद्वारेण कुमतिमतोन्मूलनतत्परा अनेके ग्रन्था गुम्फितास्सन्ति।

ग्रन्थेऽस्मिन् चतुरुत्तरशतं काव्यानां वर्त्तते । तत्र काव्यानामेकोनसप्तत्या श्रीमदार्हतीयप्रतिकृत्युत्थापनलुप्तशिवपथस्य लुम्पकमतस्य खण्डनं कृतम् ।

नवभिः काव्यैर्धर्मोत्तरसागरीयमतं निराकृतम् ।

काव्यद्वयेन सर्वज्ञार्चास्तुतिः कृता ।

द्वादशभिः काव्यैर्भगवद्द्रव्यपूजानिषेधकं पार्श्वचन्द्रमतं निरस्तम् ।

पञ्चभिः काव्यैर्जिनचैत्यार्चनादिपुण्यकर्मवादिनां मतं निरस्तम् । षड्भिः काव्यैर्जिनार्चास्तुतिः कृता ।

शेषैकेन काव्येन ग्रन्थकारैः स्वप्रशस्तिः प्रतिपादितास्ति ।

ग्रन्थस्यास्य संशोधनकर्मणि चत्वारि पुस्तकानि समासादितानि । तेष्वाद्यं अस्मद्गुरुवर्य्याणां उपाध्यायश्रीमद्वीरविजयपूज्य-

पादानां सत्कं । द्वितीयं च प्रवर्त्तकश्रीमत्कान्तिविजयपूज्यानां सत्कं । तृतीयं पुनः श्रीमद्विजयानन्दसूरीशशिष्यश्रीमदमरविजयमहाशयानां सत्कं । तुर्यं तु प्रज्ञांशश्रीमदानन्दसागरमुनिवर्याणां सत्कं । एतत्पुस्तकचतुष्काधारेण महतायासेन संशोधितेऽप्यस्मिन्निबन्धे अस्मद्दृष्टिदोषादक्षरयोजकदोषाद्वा यत्र क्वचन स्खलनं जातं भवेत्तत्र संशोध्य वाचनीयं प्रकृष्टप्रतिभाप्रधानैः प्रवरपण्डितैरित्याकाङ्क्षति—

ता.—२८—६—१५.
पादलिप्तपुर.

उपाध्यायश्रीमद्वीरविजयपदाब्जभ्रमरायमाणः
पं० दानविजयगणी.

श्रीमद् विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ।

# प्रतिमाशतकम् ।

## । सटीकम् ।

श्रीमहिमाप्रभसूरिसद्गुरुभ्यो नमः ।

लक्ष्मीपुण्यगृहेऽणहिल्लपुरके श्रीपत्तने पत्तने, याथार्थ्यं दधतीहरत्नखनितो ढंढेरके पाटके ।
श्रीवीरः कलिकुण्डपार्श्वभगवान् प्रौढिं गतः श्यामलः, पार्श्वो नाथ इति त्रयो जिनवराः कुर्वन्तु वो मङ्गलम् ॥ १ ॥
नित्यं स्नात्रमहैरिहैव भविकैः पुष्पादिभिः पूजितः, सद्भिः साधुगणैर्हृदम्बुजपदे संस्थापितो भावतः ।
श्रीपञ्चासरपार्श्वनाथ इति यः प्रासिद्ध्यमग्र्यं गतः, सोऽयं वो विदधातु वाञ्छिततति चिन्तामणीतोऽधिकः ॥ २ ॥
ध्यात्वा सारस्वतं तेजो महिमाप्रभचित्प्रदम् । पूर्णिमीयगणाधीशश्रीभावप्रभसूरिभिः ॥ ३ ॥
प्रतिमाशतकवृत्तेर्वृत्तिरीपत्पृथक्कृता । सूत्रमात्रार्थदा शिष्यज्योतीरत्नस्य हेतवे ॥ ४ ॥ युग्मम् ॥

लुम्पाकैः प्रतिमा प्रपूजनविधौ दुष्टैर्निषिद्धा स्फुटं, सा गच्छान्तरनिश्रिता परिहृता तद्वत्तदंशाश्रितैः ।
प्रोक्ताच्याऽपि च मिश्रपक्षमिलिता सा पाशदोषाकरैः, कैश्चित्पुण्यफलाय पण्डितवरैः सा पूजिता निर्जरा ॥ ५ ॥

क्षेपककाव्यमिदं द्वाररूपं ज्ञेयं । अथ कृतशतग्रन्थेन महोपाध्यायश्रीयशोविजयेन ग्रन्थोऽयं प्रतिमाशतकनामा कृतः तत्रेदं प्रतिमाविषयाशङ्कानिराकरणस्य चिकीर्षितत्वात्प्रतिमास्तुतिरूपमिष्टबीजप्रणिधानपुरस्सरमाद्यं पद्यमाह—

**ऐन्द्रश्रेणिनता प्रतापभवनं भव्याङ्गिनेत्रामृतं, सिद्धान्तोपनिषद्विचारचतुरैः प्रीत्या प्रमाणीकृता ।**
**मूर्त्तिः स्फूर्त्तिमती सदा विजयते जैनेश्वरी विस्फुरन्मोहोन्मादघनप्रमादमदिरामत्तैरनालोकिता ॥१॥**

व्याख्या—जैनेश्वरी मूर्त्तिः सदा विजयत इत्यन्वयः । जिनेश्वराणामियं जैनेश्वरी मूर्त्तिः प्रतिमा सदा व्यक्त्या (क्त्या) प्रवाहतश्च निरन्तरं विजयते सर्वोत्कर्षेण वर्त्तते, अत्र जयतेरर्थ उत्कर्षः "पराभवे तथोत्कर्षे जयत्यन्ते त्वकर्मकः" इत्याख्यातचन्द्रिकावचनात् । सर्वावधिकत्वं च वेरुपसर्गस्येति बोध्यं । मूर्त्तिः कीदृशी ? ऐन्द्रश्रेणिनता इन्द्राणामियमैन्द्री सा चासौ श्रेणिश्चेति कर्मधारयः, तया नता नमिकर्मीकृता । एतेनैतदपलापकारिणामैन्द्रः शापो ध्रुव इति व्यज्यते । पुनः कीदृशी प्रतापभवनं प्रतापस्य कोशदण्डजस्य तेजसो भवनं गृहं । उक्ततेज स्थाप्यगतं स्थापनायामुपचर्य व्याख्येयं । तेनैतदपलापकारिणो भगवत्प्रतापदहनेनैवापहता भविष्यन्ति इति व्यज्यते । पुनः कीदृशी ? भव्याङ्गिनेत्रा-

मृतं भव्याङ्गिनामासन्नसिद्धिकप्राणिनां नेत्रयोरमृतं पीयूषं सकलनेत्ररोगापनयनात् परमानन्दजननाच्च । एतेनैतद्दर्शनाद्येषां नयनयोर्नानन्दस्तेऽभव्या दूरभव्या वेत्यभिव्यज्यते । पुनः कीदृशी ? प्रमाणीकृता प्रमाणत्वेनाभ्युपगता । कैः ? सिद्धान्तोपनिषद्विचारचतुरैः सिद्धान्तानामुपनिषद्रहस्यं तद्विचारे ये चतुरास्तैः । कया ? प्रीत्या स्वरसेन नतु बलाभियोगादिना । एतेन सिद्धान्तप्रतिमाप्रामाण्याभ्युपगमयोर्नान्तरीयकत्वात् स्वरसतः प्रतिमाप्रामाण्याभ्युपगन्ता नर एव शिष्टो मान्य इत्यावेदितं भवति, तदनभ्युपगन्ता च सिद्धान्तानाभिज्ञ इति । पुनः कीदृशी ? स्फूर्त्तिमती स्फूर्त्तिः प्रतिक्षणवर्द्धमानकान्तिः सन्निहितप्रातिहार्यत्वं वा तद्वती । एतेन तदाराधकानामेव बुद्धिस्फूर्त्तिर्भवति नान्यस्येति सूच्यते । पुनः कीदृशी ? अनालोकिता सादरमवीक्षितेत्यर्थः, अर्थान्तरसंक्रमितवाच्यत्वात् । कैः ? विस्फुरन्मोहोन्मादघनप्रमादमदिरामत्तैः विस्फुरन् विविधं परिणमन् यो मोहोन्मादो घनप्रमादश्च तावेव ये मदिरे ताभ्यां ये मत्तास्तैः । नच प्रमादस्य मोहेनैव गतार्थत्वादाधिक्यं, अनाभोगमतिभ्रंशादिरूपस्य तस्य ग्रहणादिति ॥ १ ॥

इत्येवमाद्यपद्ये प्रतिमाया निखिलप्रेक्षावदादरणीयत्वमुक्तं । अथ तदनादरकारिणो नामादिनिक्षेपत्रयस्य भावनिक्षेपतुल्यताव्यवस्थापनाद्वारेणाक्षिपन्नाह—

**नामादित्रयमेव भावभगवत्ताद्रूप्यधीकारणं, शास्त्रात्स्वानुभवाच्च शुद्धहृदयैरिष्टं च दृष्टं मुहुः ।**

---

१ वाच्यं जिनबिंबादिस्तस्याऽर्थांतरो वृक्षादिस्तस्मिन् ।

तेनार्हत्प्रतिमामनादृतवतां भावं पुरस्कुर्वतामन्धानामिव दर्पणे निजमुखालोकार्थिना का मतिः॥२॥

**व्याख्या**—शुद्धहृदयैर्गीतार्थैः। नामादित्रयमेव नामादिपदस्य नामादिनिक्षेपपरत्वात् कृदभिहितन्यायान्निक्षिप्यमाणं नामादित्रयमेवेत्यर्थः। भावभगवतो निक्षिप्यमाणभावार्हतस्तादूप्यधियोऽभेदबुद्धेः कारणं। शास्त्रादागमप्रमाणात्। स्वानुभवात् स्वगतप्रातिभप्रमाणाच्च। मुहुर्वारंवारमिष्टं च दृष्टं चेत्यन्वयः। शास्त्रादिष्टमनुभवाच्च दृष्टं। तेन तत्त्वप्रतिपत्त्युपायसामग्र्यमावेदितं। तदाह योगाचार्यवचनानुवादी हरिभद्रसूरिः—"आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते तत्त्वमुत्तमम् ॥ १ ॥" इति। तेन भावनिक्षेपाध्यात्मोपनायकत्वेन नामादिनिक्षेपत्रयस्य। अर्हत्प्रतिमां स्थापनानिक्षेपस्वरूपत्वेनानादृतवतां भावं भावनिक्षेपं पुरस्कुर्वतां वाङ्मात्रेण प्रमाणयतां। दर्पणे निजमुखालोकार्थिनामन्धानामिव का मतिर्न काचिदित्यर्थः। निक्षेपत्रयानादरे भावोल्लासस्यैव कर्तुमशक्यत्वाच्छास्त्र इव नामादित्रये हृदयस्थिते सति भगवान् पुर इव स्फुरति, हृदयमिवानुप्रविशति, मधुरालापमिवानुवदति, सर्वाङ्गीणमिवानुभवति, तेन च सर्वकल्याणसिद्धिः, तत्कथं निक्षेपत्रयादरं विना भावनिक्षेपादरो भावोल्लासस्य तदधीनत्वात्। न च नैसर्गिकएव भावोल्लास इत्येकान्तोऽस्ति जैनमते, तथा सति सर्वव्यवहारोच्छेदप्रसङ्गादिति स्मर्त्तव्यम्। अत्र निरुक्तविशेषणविशिष्टेषु लुम्पकेषु निरुक्तविशेषणविशिष्टान्धरूपोत्प्रेक्षाकल्पितोपमानमादायोपमा वेति यथौचित्येन योजनीयं तत्तदलङ्कारग्रन्थनिपुणैः। एतेन स्वगताध्यात्मोपनायकता गुणेन वन्द्यत्वमपि चतुष्टयं विशिष्टं इत्युक्तं भवति शिरश्चरणसंयोगरूपं हि वन्दनं, भावभगवतोऽपि शरीर एव

संभवति, ननु भावभगवत्स्वरूपे आकाश इव तदसंभवी (वि)। भावसम्बन्धाच्छरीरसम्बद्धं वन्दनं भावस्यैवायातीति। तत एव नामादिसम्बद्धमपि भावस्य किं न प्राप्नोतीति परिभावय। कश्चिदाह जडमतिव्युद्ग्राहितः—किमेताभिर्युक्तिभिः, महानिशीथ एव भावाचार्यस्य तीर्थकृत्तुल्यत्वमुक्तं, निक्षेपत्रयस्य चाकिञ्चित्करत्व-मिति। तत्र पञ्चमाध्ययने "चउव्विहा आयरिया पन्नत्ता तंजहा नामायरिया २ भावायरिया, जे भावायरिया ते तित्थयरसमा चेव दट्ठव्वा"। अत्र वयं ब्रूमः—परमशुद्धभावग्राहकनिश्चयनयस्यैवायं विषयः, यन्मते एकस्यापि गुणस्य त्यागे मिथ्यादृष्टित्वमिष्यते, तदाहुः—"जो जह वायं न कुणइ मिच्छादिट्ठी तओ हु कोन्नो त्ति" तन्मते निक्षेपान्तरानादरेऽपि नैगमादिनयच्छन्देन नामादिनिक्षेपानां प्रामाण्याभ्युपगमात्क इव व्यामोहो भवतः, सर्वनयसंमतस्यैव शास्त्रार्थत्वात्। अन्यथा सम्यक्त्वचारित्रैक्यग्राहिणा निश्चयनयेनाप्रमत्तसंयत एव सम्यक्त्वस्वाम्युक्तो न प्रमत्तान्त इति श्रेणिकादिनां बहूनां प्रसिद्धं सम्यक्त्वं न स्वीकरणीयं स्याद्देवानांप्रियेण। उक्तार्थप्रतिपादकं चेदं सूत्रमाचाराङ्गे पञ्चमाध्ययने तृतीयोद्देशके आलापकः। सूत्रतः—"जं सम्मं ति पासहा तं मोण ति पासहा, जं मोणं ति पासहा तं सम्मं ति पासहा" इत्यादि। अस्यार्थः—जं सम्मं ति यत्सम्यक्त्वं कारकसम्यक्त्वं तन्मौनं मुनिभावं यच्च मौनं तत्सम्यक्त्वं कारकसम्यक्त्वं पासह पश्यत इत्यादि ज्ञेयं। भावाचार्यनामस्थापना भावतः प्रशस्तं नातिक्रामति। अङ्गारमर्दकादेर्द्रव्यं तु तन्नामस्थापनावदप्रशस्तमेवेति प्रागुक्तमहानिशीथसूत्रे नियोजयनीयत्वार्थः, तद्वदागमः गुरुतत्त्वनिश्चये आलापकः—"तत्थ णिओगो एसो जं दव्वं होइ सुद्धभावस्स। तण्णामा गिइ-

तुच्छं तं सुहमियरं तु विवरीयं ॥ १ ॥ जह गोयमाइआणं णामाइं तिण्णि हुंति पावहरा । अंगारमद्दस्स य णामाइं तिण्णि पावयरा ॥ २ ॥ " इति प्रशस्तभावसंवन्धिनां सर्वेषां निक्षेपाणां प्रशस्तत्वमेवेति निर्व्यूढं । किंच नामनिक्षेपस्याराध्यत्वं तावत् आलापकः—"चउवीसत्थेणं भंते जीवे किं जणइ ? चउवीसत्थएणं दंसणविसोहिं जणइ त्ति " । व्याख्या उत्तराध्ययनसत्के सम्यक्त्वपराक्रमाध्ययने ज्ञेया दर्शनाराधनस्योक्तत्वात् । "महाफलं खलु तहारूवाणं भगवंताणं णामगोत्तस्स विसवणयाए" इत्यादिना भगवत्यादौ महापुरुषनामश्रवणस्य महाफलोक्तेश्च । नामस्थापना निक्षेपस्याराध्यता च आलापकौ—"थयथुइमंगलेण भंते जीवे किं जणइ ? थयथुइ मंगलेणं नाणदंसणचरित्तवोहिलाभं जणइ । नाणदंसणचरित्तबोहिलाभसंपत्तेणं भंते जीवे अंतकिरिअं कप्पविमाणोववत्तिअं आराहणं आराहे " इतिवचनेनैव सिद्धा व्याख्या । अत्र स्तवः स्तवनं स्तुतिः स्तुतित्रयं प्रसिद्धं । तत्र द्वितीया स्तुतिः स्थापनार्हतः पुरतः क्रियते चैत्यवन्दनावसरतयेति । अथ द्रव्यनिक्षेपाराध्यता च सूत्रयुक्त्या (क्त्या) स्फुटैव प्रतीयते, तथाहि—श्रीआदिनाथवारके साधूनामावश्यकक्रियां कुर्वतां चतुर्विंशतिस्तवाराधने त्रयोविंशतिर्द्रव्यजिना एवाराध्यतामास्कन्दयेयुरिति । नच ऋषभाजितादिकाले एकस्तवद्विस्तवादिप्रक्रियाऽपि कर्तु शक्या, शाश्वताध्ययनपाठस्य लेशेनापि परावृत्त्या कृतान्तकोपस्य वज्रलेपत्वात् । अर्थोपयोगरहितस्योत्कीर्त्तनस्य राजविष्टिसमत्वेन योगिकुलजन्मवाधकत्वात् । अत एव द्रव्यावश्यकस्य निषेधः सूत्रेऽनुपयोगश्च द्रव्यं इति सर्वत्रोद्घोषितमनुयोगद्वारादौ । अर्थोपयोगे तु स्वीकारार्थतयैव सिद्धा द्रव्यजिनाराध्यतेति । एतेन द्रव्यजिनस्याराध्यत्वे करतलपरिकलितजलचु

लुकवर्त्तिजीवानामप्याराध्यत्वापत्तिः, तेषामपि कदाचिज्जिनपदवीप्राप्तिसंभवादिति शासनविडम्बकस्य लुम्पकस्योपहासो निरस्तः, द्रव्यजिनत्वनियामकपर्यायस्य तत्रापरिज्ञानात्। मरीचिस्तु नाभिनन्दनगिरा ज्ञातत्वाद्भरतेन वन्दित इति प्रसिद्धं, अनल्पकालेऽपि प्रस्थकादिदृष्टान्तेन दूरेऽपि नैगमनयाभिप्रायेणाश्रयणात्। योग्यता-विशेषे च ज्ञानिवचनादिनाऽवगते दोषमुपेक्ष्यापि तेषां तेषां वन्दनवैयावृत्त्यादिव्यवहारः संगच्छते। अत एवातिमुक्तकर्षेर्वीरवचनात् भाविभद्रतामवगम्य स्थविरैर्व्रतस्खलितमुपेक्ष्य वैयावृत्त्यं निर्ममे। किंच "नमो सुअस्स" इत्यादिनापि द्रव्यनिक्षेपस्याराध्यत्वं सुप्रतीतं। अक्षरादिश्रुतभेदेषु संज्ञाव्यञ्जनाक्षरादीनां भावश्रुतकारणत्वेन द्रव्यश्रुतत्वात्। पत्रकपुस्तकलिखितस्य च "दव्वसुअं जं पत्तयपोत्थयलिहिअं" इत्यागमेन द्रव्यश्रुतत्वप्रसिद्धेः। किं च जिनवाग्योगः श्रुतं द्रव्यं श्रोतृषु भावश्रुतकारणत्वादिति। भावनिक्षेपे तु न विप्रतिपत्तिरिति चतुर्णामपि सिद्धमाराध्यत्वम् ॥ २ ॥

एवं व्यवस्थिते ब्राह्मी लिपिरिव प्रतिमा सूत्रन्यायेन वन्द्येति तदपह्नवकारिणां मूढतामाविष्करोति—

**लुप्तं मोहविषेण किं किमु हतं मिथ्यात्वदम्भोलिना, मग्नं किं कुनयावटे किमु मनो लीनं तु दोषाकरे।**
**प्रज्ञप्तौ प्रथमं नतां लिपिमपि ब्राह्मीमनालोकयन्, वन्द्याऽर्हत्प्रतिमा न साधुभिरिति ब्रूते यदुन्मादवान् ॥३**

व्याख्या—प्रज्ञप्तौ प्रथममादावेव नतां सुधर्मस्वामिना ब्राह्मीं लिपिमप्यनालोकयन् धारणाबुद्ध्याऽपरिकलयन् अर्हत्प्रतिमा साधुभिर्न वन्द्येति यदुन्मादवान् मोहवशो ब्रूते, तत् किं तस्य मनो मोहविषेण लुप्तं व्याकुलितं? किमु मिथ्या-

त्वदम्भोलिना मिथ्यात्ववज्रेणाहतं चूर्णितं ? अथवा किं कुनयावटे दुर्नयकूपे मग्नं ? यद्वा तु इति उत्प्रेक्षायां दोषसमूहाभिन्ने दोषाकरे लीनं ? छायाश्लेषेण मनश्चन्द्रं विशतीति श्रुतेर्मतमित्यर्थः । अत्र "लिम्पतीव तमोऽङ्गानि" इत्यादौ लेपनादिना व्यापनादेरिव विपकर्तृकलुप्ततादिना लुम्पकमनोमूढताया अध्यवसानात्स्वरूपोत्प्रेक्षा किमादिद्योतकसंभावनं, अथोत्प्रेक्षा प्रकृतस्य समा न यदिति काव्यप्रकाशकारः । असद्धर्मसंभावने वादिद्योत्योत्प्रेक्षेति हेमचन्द्राचार्याः । "णमो बंभीए लिवीए" इति प्रथमं प्रशस्तौ पदं ज्ञेयमिति ॥ ३ ॥

अथ नामप्रतिबन्द्यां स्थापनां स्थापयति—

**किं नामस्मरणेन न प्रतिमया किंवा भिदा कानयोः, सम्बन्धः प्रतियोगिना न सदृशो भावेन किंवाद्वयोः ।**
**तद्वन्द्यं द्वयमेव वा जडमते त्याज्यं द्वयं वा त्वया, स्यात्तर्कादत एव लुम्पकमुखे दत्तो मषीकूर्चकः ॥४॥**

व्याख्या—किं नामस्मरणेन चतुर्विंशतिस्तवादिगतनामानुचिन्तनेन ? नाम्नः पुद्गलात्मकत्वेनात्माऽनुपकारित्वात् । नाम्नः स्मरणेन नामिस्मरणे तद्गुणसमापत्त्या फलमिति चेदत्राह—प्रतिमया किं वा न स्यात् ? अमुद्रगुणसमुद्रलोकोत्तरमुद्रालङ्कृतभगवत्प्रतिमादर्शनादपि सकलातिशायिभगवद्गुणध्यानस्य सुतरां संभवात् । तदुक्तं—"प्रशमरसनिमग्नं दृष्टियुग्मं प्रसन्नं" । नाम्नो नामिना सह वाच्यवाचकभावसम्बन्धोऽस्ति यथा न तथा स्थापनाया इत्यस्ति विशेष इति चेदत्राह—प्रतियोगिना इतरनिक्षेपनिरूपकेण भावनिक्षेपेण सह द्वयोर्नामस्थापनयोः सम्बन्धः किं सदृशो न सदृशवचनमिथः किञ्चिद्वैष-

स्यमित्यर्थः । एकत्र वाच्यवाचकभावस्यान्यत्र स्थाप्यस्थापकभावस्याविशेषात् । अनया प्रतिबन्ध्या दुर्वादिनमाक्षिपति–तत्तस्मात्कारणात् हे जडमते ! त्वया द्वयमेव नामस्थापनालक्षणमविशेषेण वन्द्यं, द्वयोरपि भगवदध्यात्मोपनायकत्वाविशेषात् । अन्तरङ्गभक्त्यासत्त्यभावादुपेक्ष्यत्वे तु द्वयमेव त्वया त्याज्यं स्यात् । तच्चानिष्टं, नाम्नः परेणाप्यङ्गीकरणात् । अत एव तर्कात् लुम्पकमुखे मषीकूर्चको दत्तः स्यात्, मालिन्यापादनादिति भावः। अत्र मषीकूर्चकत्वेन मौनदानविवक्षायां "कमलमनम्भसि"

इत्यादाविव रूपकगर्भा यथाश्रुतविवक्षायां त्वसम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः । भावनिक्षेपो यद्यवन्द्यस्थापनानिक्षेपप्रतियोगी स्यादवन्द्यनामनिक्षेपप्रतियोगी स्यादित्येवं वा तर्कस्य व्यधिकरणत्वं निरसनीयम् ॥ ४ ॥

प्रतिमादीनेव भङ्ग्याक्षिपंस्तदाराधकानभिष्टौति ।

**स्वान्तं ध्वान्तमयं मुखं विषमयं दृग्धूमधारामयी, तेषां यैर्न नता स्तुता न भगवन्मूर्तिर्न वा प्रेक्षिता।**
**देवैश्चारणपुङ्गवैः सहृदयैरानन्दितैर्वन्दितां, ये त्वेनां समुपासते कृतधियस्तेषां पवित्रं जनुः ॥ ५ ॥**

**व्याख्या**–यैर्भगवन्मूर्तिर्न नता तेषां स्वान्तं हृदयं ध्वान्तमयमन्धकारप्रचुरं, हृदये नमनप्रयोजकलोकाभावादेव तदनमनोपपत्तेः । यैर्भगवन्मूर्त्तिर्न स्तुता तेषां मुखं विषमयं, स्तुतिरूपपीयूषाभावस्य तत्र विषसत्त्वे एवोपपत्तेः । यैर्भगवन्मूर्त्तिर्वाऽथवा न प्रेक्षिता तेषां दृग् धूमधारामयी जगदृगासेचनकतत्प्रेक्षणाभावस्य धूमधारावृतनेत्रत एवोपपत्तेः । ध्वान्तत्वादिना दोषविशेषा एवाध्यवसीयन्ते इत्यतिशयोक्तिः सा चोक्तदिशा काव्यलिङ्गानुप्राणिताऽवसेया । ये तु कृतधियः पण्डिता एनां भगवन्मूर्त्तिं समुपासते, तेषां जनुर्जन्म पवित्रं नित्यं मिथ्यात्वमलपरित्यागात् । कीदृशीं ? देवैः सुरासुरव्यन्तरज्यो-

तिष्कैः चारणपुङ्गवैश्चारणप्रधानैर्जङ्घाचारणविद्याचारणैः सहृदयैर्ज्ञाततत्त्वैरानन्दितैर्जातानन्दैर्वन्दितां । हेतुगर्भं चेदं विशेषणं, देवादिवन्दितत्वेन शिष्टाचारात्तत्समुपासनं जन्मपावित्र्यायेति भावः । देवैर्यथा वन्दिता तथाऽनन्तरं स्फुटीकरिष्यामः, चारणाधिकारप्रतिबद्धश्चायं विंशतितमशते नवमोद्देशके-"कइविहाणं भंते चारणा पन्नत्ता" इत्यादि ज्ञेयम् ॥ ५ ॥

उक्तमेव स्वीकारणं तत्र कुमतिकल्पिताशङ्कां निरस्यन्नाह—

**प्रज्ञप्तौ प्रतिमानतिर्न विदिता किं चारणैर्निर्मिता, तेषां लब्ध्युपजीवनाद्विकटनाभावात्त्वनाराधना ।**
**सा कृत्याकरणादकृत्यकरणाद्भग्नव्रतत्वं भवेदित्येता विलसन्ति सन्नयसुधासारा बुधानां गिरः ॥६॥**

व्याख्या—प्रज्ञप्तौ भगवतीसूत्रे किं चारणैर्जङ्घाचारणविद्याचारणश्रमणैर्निर्मिता प्रतिमानतिर्न विदिता न प्रसिद्धा ? अपि तु प्रसिद्धैव सुधर्मस्वामिना कण्ठीरवेणोक्तस्य तत्र तरणिप्रकाशतुल्यस्य कुमतिकौशिकवाग्मात्रेणापह्नोतुमशक्यत्वात् । ननु यदुक्तं तद्व्यक्तमेव, परं चैत्यवन्दननिमित्तालोचनाऽभावेऽनाराधकत्वमुक्तमिति तेषां चैत्यनतिं स्वारसिकीं नाभ्युपगच्छाम इत्याशङ्कायामाह—तेषामिति, तेषां जङ्घाचारणविद्याचारणानां लब्ध्युपजीवनात् तस्य प्रमादरूपत्वात् । तु पुनर्विकटनाभावादालोचनाभावात् "आलोयणा वियडणा" इतिनिर्युक्तिवचनाद्विकटनाशब्दस्यालोचनार्थः । अनाराधनात् न त्वन्यतो निमित्तात् तदाह—साऽनाराधना कृत्यस्य प्रमादालोचनस्याकरणात् , अकृत्यकरणं चैत्यवन्दने मिथ्यात्वकरणं, ततस्तत्पुरस्कृत्याऽनाराधनायां तूच्यमानायां भग्नव्रतत्वं भवेत् मिथ्यात्वसहचारिणामनन्तानुबन्धिनामुदयेन चारित्रस्य मूलत एवोच्छेदात्

"मूलच्छेज्जं पुण होइ बारसन्हं कसायाणं" इतिवचनात् । तच्च नालोचनामात्रेऽपि शोधयितुं शक्यमित्ययं भारो मिथ्याकल्पकस्य शिरस्यास्तामित्येताः सन्नयः समीचीननयः स एव मिथ्याकल्पनाविषविकारनिरासकृत्वात् सुधा पीयूषं तेन साराः । बुधानां सिद्धान्तपारदृश्वानां गिरो वाचः ॥ ६ ॥

ननु चारणानां यावान् गतेर्गोचर उक्तस्तावद्देशगमनपरीक्षायामेव मुख्य उद्देशस्तस्यां क्रियमाणायां तत्तच्चैत्यानामपूर्वाणां दर्शनाद्विस्मयोद्बोधेन तन्नतिर्न तु स्वरसत इति तदाचरणं न शिष्टाचार इति सर्वेषां साधूनां न तद्वन्द्यता तद्दृष्टान्तेनेति कुमतिमतमाशङ्क्य निषेधति—

**तेषां न प्रतिमानतिः स्वरसतो लीलानुषङ्गात्तु सा, लब्ध्याप्तादिति कालकूटकवलोद्गारा गिरः पाप्मनाम् ।**
**हन्तैवं न कथं नगादिषु नतिर्व्यक्ता कथं चेह सा, चैत्यानामिति तर्ककर्कशगिरा स्यात्तन्मुखं मुद्रितम् ॥७॥**

व्याख्या—तेषां जङ्घाचारणविद्याचारणानां प्रतिमानतिः स्वरसतो न वर्त्तते स्वरसः श्रद्धाभक्तिसंलुलितः परिणामस्तस्मादिति । तु पुनः । लब्ध्याप्ताल्लब्धिप्राप्तात् लीलानुषङ्गात् लब्धिप्राप्तलीलादिदृक्षया प्रवृत्तानां तत्रावर्जनीयसंनिधिकदर्शनतयेत्यर्थः । सा नतिर्वर्त्तते, न चास्त्वारसिकतन्नत्यापि क्षतिः स्वरसिकाकृत्यकरणस्यैव दोषत्वादित्येताः पाप्मनां लुम्पाकदुर्गतानां गिरो वर्त्तन्ते । किं विशिष्टाः ? कालकूटकवलोद्गारा उद्गीर्यमाणकालकूटकवला इत्यर्थः । भक्षितामिथ्यात्वकालकूटानामीदृशानामेवोद्गाराणां संभवात् । अत्रोत्तरं—हन्तेति निर्देशे, एवं लीलाप्राप्तस्य विस्मयेन साधूनां वन्दनसंभवे

कथं नगादिषु मानुषोत्तरनन्दीश्वररुचकमेरुतदारामादिविषये न चारणानां नतिर्जाता। तत्रापि अपूर्वदर्शनजनितविस्मयेन तत्संभवात् कथं चेह भरतविदेहादौ ततः प्रतिनिवृत्तानां साधूनां चैत्यानां प्रतिमानां सा नतिर्जाता? इत्येवंभूता या तर्ककर्कशा गीस्तया तन्मुखं पाप्मवदनं मुद्रितं स्यात्, अनया गिरा ते प्रतिवक्तुं न शक्नुयुरित्यर्थः। कर्कशपदं तत्तर्कस्य निविडमुद्राहेतुत्वमभिव्यनक्ति। अत्र यथा गोचरचर्योद्देशेनापि निर्गतेन साधुनाऽन्तरोपनताः साधवः स्वरसत एव वन्दनीयास्तथा गतिगोचरदर्शनायापि गतैश्चारणैर्नन्दीश्वरादिप्रतिमानतिः स्वरसत एवानभ्रोपनीतपीयूषवृष्टिवत् परमप्रमोदहेतुत्वादित्युक्तं भवति ॥ ७ ॥

अथोक्तालापके "तहिं चेइआई वंदइ" इत्यस्यायमर्थो यथा भगवद्भिरुक्तं तथैव नन्दीश्वरादिदृष्टमिति अहो तथ्यमिदं भगवज्ज्ञानमित्यनुमोदत इत्यर्थः चैत्यपदस्य ज्ञानार्थत्वादिति मुग्धपर्षदि मूर्धानमाधूय व्याचक्षाणमुपहसन्नाह—

**ज्ञानं चैत्यपदार्थमाह न पुनर्मूर्त्तिं प्रभोर्यो द्विषन्, वन्द्यं तत्तदपूर्ववस्तुकलनाद्दृष्टार्थसंचार्यपि।**
**धातुप्रत्ययरूढिवाक्यवचनव्याख्यामजानन्नसौ, प्रज्ञावस्तु जडः श्रियं न लभते काको मरालेष्विव ॥८॥**

व्याख्या—यो द्विषन् जिनशासने द्वेषं कुर्वन् प्रकृते चैत्यपदार्थं ज्ञानमाह, न पुनः प्रभोर्मूर्त्तिमाह। किं भूतं ज्ञानं? तस्य तस्यापूर्वस्य वस्तुनः कलनात् परिच्छेदात्। वन्द्यमनुमोद्यमिति योगः। किं भूतमपि? दृष्टार्थसंचार्यपि इह लोके चैत्यवन्दनं संचरिष्णुभविष्णुशब्दार्थमपि अपूर्वदर्शनेन विस्मयोत्पादकत्वाद्भगवज्ज्ञानस्य वन्द्यत्वे "इह चेइआई वंदइ" इत्य-

स्यानुपपत्तिः इहापूर्वदर्शनादित्यपिरापातोनौचित्यं दर्शयति—स जडः प्रज्ञावत्सु प्रेक्षावतां मध्ये श्रियं सदुत्तरस्फूर्त्तिसमृद्धिं न लभते । केषु क इव ? मरालेषु राजहंसेषु काक इवेत्युपमा । किं कुवन् ? अजानन् । कां ? धात्वादिव्याख्यां । तथाहि—चैत्यानीत्यत्र "चिती संज्ञाने" इति धातुः कर्मणि ण्यप्रत्ययः, तथा चार्हत्प्रतिमा एवार्थः । चिती संज्ञाने संज्ञानमुत्पद्यते काष्ठकर्मादिषु प्रतिकृतिं दृष्ट्वा "जहा एसा अरिहंतपडिमत्ति" चूर्णिस्वरसादिति प्रकृतेर्ज्ञानमर्थं वदन् प्रकृतिप्रत्ययानभिज्ञ एव । तथा रूढेरप्यनभिज्ञ एव चैत्यशब्दस्य जिनगृहादावेव रूढत्वात् "चैत्ये जिनौकस्तद्बिम्बं चैत्यो जिनसभातरुः" इति कोशात् । एतेन विपरीतव्युत्पत्त्या नामभेदप्रत्यययोगार्थोऽपि निरस्तः, योगाद्रूढेर्बलवत्त्वात्, अन्यथा पङ्कजपदाच्छैवालादिबोधप्रसङ्गात् । वाक्यस्यापि वाक्यं साकांक्षापदसमुदाय "इहं चेइआइं वंदइ" इत्यस्यात्रस्थानि चैत्यानि वन्दत इति हि वाक्यार्थः । स च चैत्यपदस्य ज्ञानार्थत्वे न घटते, भगवज्ज्ञानं नन्दीश्वरादिष्टाचित्वाभावात्, जगद्वृत्तित्वस्यान्यसाधारण्येनाविस्मापकत्वात् । वचनस्यापि चैत्यशब्दस्य ज्ञानस्यैकत्वात् ज्ञानार्थे चैत्यशब्दस्यादिष्टबहुवचनस्य कुत्राप्यननुशासनात् । तथा परिभाषणस्याभावात्, अन्यथा केवलनाणं इत्यस्य स्थले चेइआइं इति प्रयोगापत्तेः । उक्तश्चारणवन्द्यताऽधिकारः ॥८॥

अथ देववन्द्यतामधिकृत्य देवानां शरणीयकरणीयतया भगवन्मूर्त्तिमभिष्टौति—

**अर्हच्चैत्यमुनीन्द्रनिश्रिततया शक्रासनक्ष्मावधि, प्रज्ञप्तौ भगवाञ्जगाद चमरस्योत्पातशक्तिं ध्रुवम् ।**
**जैनीं मूर्त्तिमतो न योऽत्र जिनवज्जानाति जानाति कस्तं मर्त्यं बत शृङ्गपुच्छरहितं स्पष्टं पशुं पण्डितः ॥९॥**

व्याख्या—अर्हन्तस्तीर्थंकराश्चैत्यानि तत्प्रतिमा मुनीन्दवः परमसौम्यभाजः साधुचन्द्राः, तन्निश्रिततया तन्निश्राकरणेन हेतुना भगवान् ज्ञातनन्दनः चमरस्यासुरकुमारराजस्य शक्रस्य चासनक्ष्मा आसनपृथ्वी साऽवधिर्यत्र यस्यां क्रियायां, तथा चमरस्योत्पातस्य शक्तिं ध्रुवं निश्चितं जगाद। अतः अर्हदनगारमध्ये चैत्यपाठात्, योऽत्र जिनशासने जैनीं मूर्त्तिं जिनवज्जिनतुल्यां न जानाति, तं मर्त्यं मनुष्यं कः पण्डितो मोक्षानुगतप्रज्ञावान् जानाति ? न कोऽपीत्यर्थः। सर्वेषामपि प्रेक्षावतां स मनुष्यमध्ये न गणनीय इति तात्पर्यम्। कीदृशं तं ? अल्पविवेकतया स्पष्टं प्रत्यक्षं पशुं। कीदृशं पशुं ? शृङ्गपुच्छाभ्यां रहितं शृङ्गपुच्छाभावमात्रेण तस्य पशोः (च) वैधर्म्यं, नान्यदित्यर्थः। व्यतिरेकालङ्कारगर्भोऽत्राक्षेपः "उपमानाद्यदन्यस्य व्यतिरेकः स एव सः" इति काव्यप्रकाशकारः। प्रपञ्चितं चैतदलङ्कारचूडामणिवृत्तावस्माभिः ॥९॥

अथानाशातनाविनयेन देवैर्वन्दिता भगवन्मूर्त्तिः कस्य सचेतसो न वन्द्येत्याशयेनाह—

**मूर्त्तीनां त्रिदशैस्तथा भगवतां सक्थ्नां सदाऽऽशातनात्यागो यत्र विधीयते जगति सा ख्याता सुधर्मा सभा।**
**इत्यन्वर्थविचारणापि हरते निद्रां दृशोर्दुर्नयध्वान्तच्छेदरविप्रभा जडधियं घूकं विना कस्य न ॥१०॥**

व्याख्या—तथेत्यर्थान्तरसमुच्चये। भगवतां मूर्त्तीनामसद्भावस्थापनारूपाणां सक्थ्नां जिनदाढानां यत्र सदाऽऽशातनात्यागो विधीयते सा सभा सुधर्मेति ख्याता इत्यन्वर्थविचारणापि सुधर्मापदव्युत्पत्तिभावनाऽपि जडधियं घूकमुलूकं विना कस्य दृशोर्निद्रां न हरते ? अपि तु सर्वस्यैव दृशोर्निद्रां हरत इत्यर्थः। कीदृशी अन्वर्थविचारणा ? दुर्नया एव ध्वा-

न्तानि तेषां छेदे रविप्रभा तरणिकान्तिः। रविसदृशी तु न व्याख्येया, तत्सदृशात्तत्कार्यानुपपत्तेः। अत्र विनोक्तिरूपककाव्यलिङ्गान्यलङ्काराः—"विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न चेतरः"। "तद्रूपकमभेदो य उपमानोपमेययोः" काव्यलिङ्गंहेतोर्वाक्यपदार्थता" इति (च) तल्लक्षणानि। रश्मिप्रभापदार्थौ निद्राहरणे हेतुरिति पदार्थरूपं काव्यलिङ्गं द्रष्टव्यमित्यादि ॥ १० ॥

अथ सूर्याभाधिकारेण प्रतिमारिणां शासनार्थस्तेनानां कांदिशीकतां प्रदर्शयंस्ता अभिष्टौति—

**प्राक्पश्चाच्च हितार्थतां हृदि विदन् तैस्तैरुपायैर्यथा, मूर्तीः पूजितवान्मुदा भगवतां सूर्याभनामा सुरः।**
**याति प्रच्युतवर्णकर्णकुहरे तप्तत्रपुत्वं नृपप्रश्नोपाङ्गसमर्थिता हतधियां व्यक्ता तथा पद्धतिः ॥ ११ ॥**

**व्याख्या**—प्रागादौ पश्चाच्च उत्तरवद्भवभवान्तरसंबन्धिन्यामायत्यां हितार्थतां श्रेयोऽभिलाषितां हृदि स्वान्ते विदन् जानन् तैस्तैर्विवक्ष्यमाणैरुपायैर्भक्तिसाधनप्रकारैर्यथा सूर्याभनामा सुरः भगवतां मूर्त्तीः पूजितवान्। तथा व्यक्ता प्रकटा नृपप्रश्नोपाङ्गे राजप्रश्नीयोपाङ्गे समर्थिता सहेतु निर्णीता पद्धतिः प्रक्रिया। हतधियां मूलोच्छिन्नबुद्धीनां लुम्पकमतवासितानां प्रच्युतवर्णे प्रच्युतो वर्णो यस्मात्तादृशेऽनक्षरे इत्यर्थः। तेनाक्षरशक्तिप्रतिबन्धाभावादतिदाहसंभवो व्यज्यते। कर्णकुहरे श्रोत्रबिले तेनासंस्कृतत्वं व्यज्यते। तप्तत्रपुत्वं याति तान्यक्षराणि दुर्मतिकर्णे तप्तत्रपुवत् स्वगतदोषादेव दाहं जनयतीत्यर्थः। अत्र तप्तत्रपुत्वं यातीति निदर्शना "अभवद्वस्तुसम्बन्धः उपमापरिकल्पः निदर्शना" इति मम्मटवचनात्, असम्बन्धे सम्बन्धरू-

पाऽतिशयोक्तिरित्यपरे ॥ ११ ॥

नन्वत्र प्राक् पश्चाच्च हितार्थिता देवभवापेक्षयैव पर्यवस्यति तथा चैहिकाभ्युदयमात्रं प्रतिमापूजनादिफलं सूर्याभस्य न मोक्षार्थिनामादरणीयं, देवस्थितेर्देवानामेवाश्रवणीयत्वादित्याशङ्क्य तन्निराकरणपूर्वं तादृशशङ्काकारिण आक्षिपन्नाह—

**नात्र प्रेत्य हितार्थितोच्यत इति व्यक्ता जिनार्चास्थितिर्देवानां न तु धर्महेतुरिति ये पूत्कुर्वते दुर्धियः। प्राक्पश्चादिव रम्यतां परभवश्रेयोऽर्थितासङ्गतां, प्राक् पश्चाच्च हितार्थितां श्रुतमतां पश्यन्त्यहो ते न किम्**

व्याख्या—नात्राधिकृते सूर्याभकृत्ये प्रेत्य हितार्थिता उच्यते "एयं मे पेचाहिआए" इत्याद्यवचनात्, "पच्छापुराहिआए" इतिवचनस्य च धनकर्षणस्थलेऽप्युक्तत्वादिति जिनार्चा व्यक्ता प्रकटा देवानां स्थितिः स्थितिमात्रं, न तु धर्महेतुर्धर्मसाधनं इति ये दुर्धियो दुष्टबुद्धयः पूत्कुर्वते शिरसि रजः क्षिपन्त इव बाढं प्रलपन्ति। ते श्रुतमतां आगमकथितां प्राक् पश्चाद्रम्यतामिव-प्राक् पश्चाच्च हितार्थितां परभवश्रेयोऽर्थितायाः संगतां सहितां उभयलोकार्थितापरिणतामित्यर्थः किं न पश्यन्ति ? तथाऽदर्शनं तेषां महाप्रमाद इत्यर्थः। प्राक् पश्चाद्रम्यतावचनं चेदं राजप्रश्नीये—"तएणं केसीकुमारसमणे पएसिं एवं वयासी—मा णं तुमं पएसी पुव्विं रमणिज्जे पच्छा अरमणिज्जे भवेज्जासि जहा से वणसंडेइ वा" इत्यालापकाः। व्याख्या अत्र चतुर्थभागे विवेकितया पूर्वं प्रतिपन्नदानधर्मनिर्वाहविशिष्टशीलादिगुणैः प्राक् पश्चाद्रमणीयत्वं यथोक्तोभयलोकोपयोगं ख्यापयति। तथा किं मे इत्यादिप्रश्नोत्तरं "पुव्विं" पच्छा वि "इत्यादि सामानिकदेवानां वचनं किं न तथेत्यन्तरात्मना पर्यालोचय। ननु

"परिभाएमाणे" इत्यन्तमनुकम्प्यमात्रं शीलव्रतादिना रमणीयत्वभाव एव च विधिरिति चेत् तत्किं दानधर्मविधिमप्युच्छेत्तुमुद्यतोऽसि ? न जानासि तुंगियाश्राद्धवर्णने "पडिलाभेमाणे" इत्यन्तस्येव "परिभाएमाणे" इत्यन्तस्याधिकृते आनश्प्रत्ययबलेन विधिसूचकत्वमिति ॥ १२ ॥

स्थितिविषयाशङ्कामेव समानधर्मदर्शनेन प्रपञ्चयत उपहसन्नाह—

**वाप्यादेरिव पूजना दिविषदां मूर्तेर्जिनानां स्थितिः, साद्दश्यादिति ये वदन्ति कुधियः पश्यन्ति भेदं तु न ।**
**एकत्वं यदि ते वदन्ति निजयोः स्त्रीत्वेन जायाम्बयोस्तत्को वा यततामसंवृततरं वक्त्रं पिधातुं बुधः॥१३॥**

व्याख्या—वाप्यादेर्नन्दापुष्करिण्यादेरिव । आदिना महेन्द्रध्वजतोरणसभाशालभञ्जिकादिपरिग्रहः । दिविषदां देवानां जिनानां मूर्त्तेः पूजना स्थितिः स्थितिमात्रं साद्दश्यात् अर्चनशब्दाभिधानसाम्यादिति ये कुधियः कुत्सितबुद्धयो वदन्ति, भेदं तु वक्ष्यमाणं न पश्यन्ति । ते यदि स्त्रीत्वेन स्त्रीलिङ्गमात्रेण निजयोः स्वकीययोर्जायाम्बयोः कान्ताजनन्योः एकत्वं वदन्ति । तत्तर्हि को वा को नाम वक्त्रं मुखं अर्थात्तदीयं असंवृततरं अतिशयेनोद्घाटं बुधः पण्डितः पिधातुमाच्छादयितुं यततां पराक्रमतां अशक्येऽर्थे पण्डितस्य यत्नकरणायोगात् न कोऽपि यतताामिति भावः । प्रतिवस्तूपमया दूरान्तरेऽपि यत्किञ्चित्साम्येन भ्राम्यतामुपहासो व्यज्यते । तदुक्तं—"काके कार्ण्यमलौकिकं धवलिमा हंसे निसर्गस्थितो, गाम्भीर्ये महदन्तरं वचसि यो भेदः स किं कथ्यते । एतावत्सु विशेषणेष्वपि सखे यन्नेदमालोक्यते, केकायाः शिखिके च हंसशिशवो देशा

य तस्मै नमः ॥ १ ॥ " इति ॥ १३ ॥

भेदहेतूनेवोपदर्शयंस्तददर्शिन आक्षिपन्नाह—

**सद्धर्मव्यवसायपूर्वकतया शक्रस्तवप्रक्रियाप्रावग्राजितहृद्यपद्यरचनालोकप्रणामैरपि ।**
**ईक्षन्तेऽतिशयं न चेद्भगवतां मूर्त्यर्चने स्वःसदां, बालास्तत्पथि लौकिकेऽपि शपथप्रत्यायनीया न किम् १४**

व्याख्या—ये बाला लुम्पकाः चेद्यदि स्वःसदां देवानां भगवतां मूर्त्यर्चनेऽतिशयं विशेषं नेक्षन्ते । कया कैश्च ? सद्धर्मव्यवसायपूर्वकतया शक्रस्तवप्रक्रियादिभिः पदैश्च । एतेषां पदानामर्थमाह—सद्धर्मव्यवसायपूर्वकत्वं जिनप्रतिमार्चनस्यानुषङ्गिकवाप्याद्यर्चनतो भेदकं व्यवसायसभासंभविक्षयोपशमनिमित्तस्य सद्धर्मव्यवसायस्य भावत्वात् , भावानुगतसम्यग्दृष्टिक्रियायाश्च क्रियान्तरवद्धर्मत्वात् , व्यवसायसभायाश्च शुभाध्यवसायनिमित्तं च क्षेत्रादिरपि कर्मक्षयोपशमादिहेतुत्वाज्जिनशासने नासिद्धं, अनुगतो धर्मव्यवहारस्तु पुष्टिशुद्धिमच्चित्तानुगतक्रियैव चतुर्थगुणस्थानक्रियानुरोधात् दर्शनाचाररूपत्वाद्दर्शनव्यवसायात्मकं जिनार्चादि सिद्धं देवानां । तदुक्तं स्थानाङ्गे—" सामइए ववसाए तिविहे पन्नत्ते, नाणववसाए दंसणववसाए चरित्तववसाए त्ति" । अथ द्वितीयं भेदकं शक्रस्तवप्रक्रिया प्रसिद्धप्रणिपातदण्डकपाठः । न हि वाप्यादिकं[1] पूजयता वाप्यादेः पुरतः शक्रस्तवः पठितोऽस्ति किं त्वर्हत्प्रतिमानामेव सकलसंपद्भावान्वितः, स्थितिमात्रे त्वन्यत्र व्यपठिष्यत् ।

[1] वाप्यादिके.

न च तीर्णस्त्वं तारकस्त्वमित्यादयो भावा जिनप्रतिमातोऽन्यत्राभिनेतुं शक्यन्ते । न चाभिनयादिव्यापारं विना शान्तरसास्वाद इति, यत्र, यदुचितं तत्रैव तत्प्रयोज्यं सहृदयैरिति । अथ तथा भावैः पापनिवेदनप्रणिधानाद्यैर्भ्राजितानि यानि हृद्यानि पद्यान्यष्टोत्तरशतसङ्ख्यानि तेषां रचना प्रतिमानां पुरस्तदपि तृतीय भेदकं भावस्तुतिमाङ्गल्यता महोदयहेतुत्वेन सूत्रेऽभिधानात् तस्याधर्माक्षेपकत्वात् । न हि वाप्यादेरग्रे कृता चेति । अथ तथा चतुर्थं भेदकं आलोकप्रणामः यत्र जिनप्रतिमास्तत्र "आलोए पणामं करेइ त्ति" पाठः, अन्यत्र तु नेति विनयविशेषोऽपि धर्माक्षेपक एव । इत्येतैः पदैः कृत्वा भेदकमिति । तर्हि ते वाला विशेषदर्शनहेतुशक्तिविकला लुम्पका लौकिकेऽपि पथि भोजनादौ शपथेन कोशपानादिना प्रत्यायनीया विश्वासनीयाः किं न भवन्ति ? अपि तु तथैव भवन्ति । कामिनीकरकमलोपास्थिते शिष्यानीते वा भोजने किमिदं पुरीषमन्नं वेति संशयात् ते न विरमेयुरित्यर्थः ॥ १४ ॥

अथ स्थितिमभ्युपगम्याह—

**भव्योऽभ्यग्रगबोधिरल्पभवभाक् सद्दृष्टिराराधको, यश्चोक्तश्चरमोऽर्हता स्थितिरहो सूर्याभनाम्नोऽस्य या।**
**सा कल्पस्थितिवन्न धर्मपरतामत्येति भावान्वयात् , मा कार्षुर्भ्रममत्र केऽपि पिशुनैः शब्दान्तरैर्वञ्चिताः १५**

**व्याख्या**—अर्हता श्रीमहावीरेण यश्च सूर्याभदेव एवंविध उक्तः । कीदृशः ? विशेषणद्वारेणाह—भव्यो भवसिद्धिकः । अभ्यग्रगबोधिः समीपगतबोधिः सुलभबोधिक इति यावत् । अल्पं भवं भजतीत्यल्पभवभाक् परीत्तसंसारिक (एक) इत्यर्थः ।

सती समीचीना दृष्टिर्यस्यासौ सद्दृष्टिः सम्यग्दृष्टिरित्यर्थः । आराधको ज्ञानाद्याराधनकर्त्ता । च पुनश्चरमोऽपश्चिमभवोऽत्रास्त्यर्थेऽप्रत्यय इति । अहो इत्याश्चर्ये । अस्य सूर्याभनाम्नो देवस्य या स्थितिरस्ति सा कल्पस्थितिवत् न धर्मपरतां न धर्मव्यवहारविषयतामत्येति अतिक्रामति । कस्मात् ? भावान्वयात् शुभभावसम्बन्धात् । अत्राधिकृते पिशुनैर्नीचैः शब्दान्तरैर्वञ्चिता व्यामोहं प्रापिताः केऽपि जना भ्रमं मा कार्षुः न धर्मोऽयं किंतु स्थितिरित्यादिभ्रमभाजो मा भूवन्नित्यर्थः । सूर्याभस्य भव्यत्वादिनिश्चायक आलापको यथा—"अहन्नं भंते सूरियाभे देवे किं भवसिद्धिए" इत्यादि । अत्र देवानां ज्योतिष्कविमानाधिपतिपर्यन्तानां विमानाधिपतीनां सर्वेषां सम्यक्त्वं द्रव्यसम्यक्त्वादिकं[1] भवत्येव, तेन तेषां पूजादिकर्त्तव्यं निश्चायकमुक्तं, मिथ्यादृष्टीनां तु विमानाधिपतित्वं नास्त्येवेत्यादिवक्तव्यता मूलवृत्तितो ज्ञेयेति ॥ १५ ॥

नन्वधार्मिका एव देवा उच्यन्ते इति तत्कृत्यं न प्रमाणमित्याशङ्क्य निराचिकीर्षुराह—

**सद्भक्त्यादिगुणान्वितानपि सुरान् सम्यग्दृशो ये ध्रुवं, मन्यन्ते स्म विधर्मणो गुरुकुलभ्रष्टा जिनार्चाद्विषः।**
**देवाशातनयाऽनया जिनमतान्मातङ्गवत्ते न्निरे, स्थानाङ्गप्रतिषिद्धया विदितया ते सर्वतो बाह्यताम्॥१६॥**

**व्याख्या**—गुरुकुलात् भ्रष्टाः त्यक्तगुरुकुलवासाः यथाच्छन्दविहारिणः एवंविधा ये जिनार्चाद्विषो जिनपूजादौ धृतद्वेषाः लुम्पाकश्वपाकाः सुरान् देवान् विधर्मणः विगतो धर्मो येभ्यस्ते विधर्माणस्तान् तादृशान् मन्यन्ते स्म । परं स्वभा-

[1] आदिशब्दादपुनर्बन्धकादि.

वेन कीदृशान् सुरान् ? सद्भक्त्येति सतां चातुर्वर्ण्यवर्णनीयस्थितीनां भक्तिर्बाह्यप्रतिपत्तिरादिर्येषां बहुमानवैयावृत्त्यादीनां ते च ते गुणाश्च तैरन्वितान् संयुतान्, एवंविधानपि । ते जिनार्चाद्विषः सर्वतः सर्वस्माज्जिनमतात् मातङ्गवत् बाह्यतां लेभिरे । कया ? अनयाऽवर्णवादरूपया आशातनया । किं विशिष्टया ? स्थानाङ्गे (ङ्ग) प्रतिषिद्धयाऽकर्त्तव्यत्वेन उक्तया विहितया प्रसह्य कृतयाऽनया तैः कर्मचण्डालत्वं प्राप्तमिति व्यङ्ग्यप्रतीतेः पर्यायोक्तं "व्यंङ्ग्यस्योक्ति पर्यायोक्तं" इति हैमवचनात् । देवाशातनयेत्यनन्तरं इवशब्दोल्लेखे तेषां सर्वतो बाह्यताया हेतोरुत्प्रेक्षणात् गम्योत्प्रेक्षा वेति ध्येयम् ॥ १६ ॥

अथ देवेषु धर्मस्थापकान् गुणानेव दर्शयन् परानाक्षिपति—

**शक्रेऽवग्रहदातृता व्रतभृतां निष्पापवाग्भाषिता, सच्छर्माद्यभिलाषिता च गदिता प्रज्ञप्तिसूत्रे स्फुटम् ।**

**इत्युच्चैरतिदेशपेशलमतिः सम्यग्दृशां स्वःसदां, धर्मित्वप्रतिभूः खलस्खलनकृद्धर्मस्थितिं जानताम् ॥१७**

**व्याख्या**—शक्रे सौधर्मेन्द्रे व्रतभृतां साधूनामवग्रहदातृताऽवग्रहदानगुणः, तथा निष्पापवाग्भाषकत्वगुणः सतां साध्वादीनां शर्माद्यभिलाषिता हितसुखादिकामित्वगुणः । चः समुच्चये । प्रज्ञप्तिसूत्रे भगवत्यां स्फुटं प्रकटं गदिता एते गुणा व्यक्तं प्रतिपादिता इत्यर्थः । इत्यमुना प्रकारेण उच्चैरत्यर्थ सम्यग्दृष्टीनां स्वःसदां देवानां तत्सम्बन्धिनीत्यर्थः । मतिः धर्मस्थितिं धर्मव्यवस्थां जानतां सहृदयानां धर्मित्वप्रतिभूः धर्मित्वस्थापनायां 'जयहेतुसाक्षिणी' वर्त्तते । कथंभूता मतिः ?

---

१ अवगृह्यते स्वामिना स्वीक्रियते य सोऽवग्रह ।

अतिदेशपेशला अतिदेशेन सादृश्यग्राहकवचनेन पेशला रमणीयाऽत एव । पुनर्मतिः कीदृशी ? खलस्खलनकृत् दुर्जयदुर्जनप्रतिवादिपराजयकृदित्यर्थः ॥ १७ ॥

यत्यननुमोद्यत्वाद्देवानां भक्तिकृत्यं न धर्म इति गूढाशयस्य शङ्कामासिद्ध्या निराकुर्वन्नाह—

**देवानामपि भक्तिकृत्यमपि न श्लाघ्यं यतीनां यतः, सूर्याभः कृतनृत्यदर्शनरुचिप्रश्नोऽर्हता नादृतः ।**
**हंतेयं जडचातुरी गुरुकुले कुत्र त्वया शिक्षिता, सर्वत्रापि हि पण्डितैरनुमतं येनानिषिद्धं स्मृतम् ॥ १८ ॥**

व्याख्या—ननु देवानां भक्तिकृत्यमपि प्रतिमार्चनादि यतीनां न श्लाघ्यं नानुमोद्यं ततश्च न धर्मो; वन्दनादि तु श्लाघ्यत्वाद्धर्म एव । अत एव "पोराणमेयं सूरियाभा" इत्यादि । यच्चतुर्विधा देवा अर्हतो भगवतो वन्दित्वा नमस्कृत्य स्वनामगोत्राणि श्रावयंतीत्येव निगमनमिति द्रष्टव्यं । इदमित्थमेवं, यतोऽर्हता श्रीमहावीरेण सूर्याभ एवंविधो न आदृतः । कीदृशः ? कृतो नृत्यविधेर्नृत्यकरणस्य प्रश्नो येन स तथा । अत्रोत्तरम्—हन्तेति खेदे, इयं चातुरी त्वया गुरुकुले कुत्र शिक्षिता ? यन्मौनं निषेधमेव व्यञ्जयतीति येन कारणेन सर्वत्रापि सर्वस्मिन्नपि संप्रदाये पण्डितैः अनिषिद्धमनुमतं स्मृतं अत एव ॥ १८ ॥

तूष्णींभावे भवद्भिरपि किं वीजं वाच्यमित्याकाङ्क्षायामाह—

१ लुम्पाक स्वाशयं द्रढयाति २ अथ ग्रन्थकार उत्तरमाह.

इच्छा स्वस्य न नृत्यदर्शनविधौ स्वाध्यायभङ्गः पुनः,साधूनां त्रिदशस्यचातिशयिनी भक्तिर्भवध्वंसिनी।
तुल्यायव्ययतामिति प्रतियता तूष्णीं स्थितं स्वामिना,बाह्यस्तत्प्रतिषेधको न कलयेत्तद्वंशजानां स्थितिम्

व्याख्या—स्वस्य भगवतो नृत्यदर्शनविधौ इच्छा न वर्त्तते, वीतरागत्वात् । पुनः साधूनां गौतमादीनां नृत्यदर्शने स्वाध्यायभङ्गः स्यात् , स चानिष्टस्तेषां । च पुनः । त्रिदशस्य सूर्याभस्य भक्तिर्भवध्वंसिनी वर्त्तते, ततो नृत्यप्रदर्शने समुदायापेक्षया तुल्यायव्ययतां समानवृद्धिहानिकत्वं प्रतियता केवलज्ञानालोकेन कलयता जानता स्वामिना श्रीवर्द्धमानस्वामिना तूष्णीं मौनेन स्थितं । भावे नपुंसके क्तप्रत्ययः। बाह्यः शासनवहिर्भूतो लुम्पकः तद्वंशजानां वीरस्वामिवंशोत्पन्नानां साधूनां इमां पूर्वोक्तां स्थितिं मर्यादां न कलयेत् न जानीयात् , न ह्यन्यकुलमर्यादां तद्बहिर्वर्त्ती जानातीत्युक्तिः ॥ १९ ॥

वाक्क्रमवैचित्र्यमेवोपदर्शयति—

सावद्यं व्यवहारतोऽपि भगवान् साक्षात् किलानादिशन्,बल्यादिप्रतिमार्चनादि गुणकृन्मौनेन संमन्यते।
नत्यादि द्युसदां तदाचरणतः कर्त्तव्यमाह स्फुटं, योग्येच्छामनुगृह्य वा व्रतमतश्चित्रो विभोर्वाक्क्रमः

व्याख्या—भगवान् वर्धमानस्वामी किल यत् बल्यादि प्रतिमार्चनादि च व्यवहारतोऽपि स्थूलव्यवहारेणापि सावद्यं सावद्यत्वव्यपदेशविषयस्थं साक्षात् कण्ठरवेण अनादिशन् सन्। मौनेन गुणकृत् संमन्यते मौनाक्षिप्तविधिना तत्र प्रवर्त्तयतीत्य-

स्वस्वौचित्येन विशेषे विश्राम्यतीति तदीयवागतिशयविजृम्भितमिति
र्थः । अप्रमादसारो हि भगवदुपदेशोऽपुनर्बन्धकादौ स्वस्वौचित्येन विशेषे विश्राम्यतीति — कर्त्तव्यमाह । अत एवाह सूर्याभो "देवानु-
भगवान् द्युसदां देवानां नत्यादि वन्दनादि तदाचरणतस्तदाचरणमाश्रित्य स्फुटं कर्त्तव्यमाह । अत एवाह सूर्याभो "देवानु-
प्रियं वन्दे" इत्याद्युक्तौ "पोराणमेयं" इत्याद्युक्तं भगवता । अयं च नाट्यकरणादिपर्युपासनाया अभ्युपदेशः, अन्यथा "जाव
पज्जुवासामि" इत्यस्योत्तराभावेन न्यूनतापत्तेः । नच नामगोत्रश्रावणविधिः स्वतन्त्र एव, किं तु चिकीर्षितसाधनानुकूल-
प्रतिज्ञाविधिशेषतया तस्योपयोगः । शेषेण च विशेषिण आक्षेपः सुकर एवेति व्युत्पन्नानां न कश्चिदत्र व्यामोह इति भगवान्
प्रवृत्तियोगिनं प्रतिव्रतं चारित्रं स्फुटं प्रकटमाह—"एवं देवाणुप्पिया गंतव्वं" इत्यादिनेति । भगवान् इच्छायोगिनं प्रति च यो-
ग्येच्छामनुगृह्य वा व्रतमाह—"अहासुहं देवाणुप्पिया मा पडिबंधं करेह" इतीच्छानुलोमभावयाहेत्यर्थः । वाकारो व्यवस्थायां ।
एवं विभोर्भगवतो वाक्क्रमो वचनरचनानुक्रमः चित्रो नानाप्रकारो भवति । मौनमपि विनीतमभिज्ञं पुरुषं प्रतीच्छानुलोमाभि-
व्यञ्जकमेवेति तत्तात्पर्यप्रतिसन्धानेनैव प्रेक्षावत्प्रवृत्तिः सुघटा । अत एव भगवता मौने स्वव्यवहारानुरोधेन कृतेऽपि पारिणा-
मिक्या बुद्ध्या स्वकृतिसाध्येष्टसाधनत्वाद्यनुसन्धाय नाट्यकरणमारब्धं सूर्याभेनेत्यादि राजप्रश्नीयवृत्तितोऽपि ज्ञेयमिति ॥२०॥

एकाधिकारिकतुल्यायव्ययत्वादेव भक्तिकर्मणि विभोर्मौनमुचितमिति लुम्पकस्य मतं निषेधति—

**दानादाविव भक्तिकर्मणि विभुर्दोषान्निषेधे विधौ, मौनी स्यादिति गीर्मृषैव कुधियां दुष्टे निषेधस्थितेः।**
**अन्यत्रप्रतिबन्धतोऽनभिमतत्यागानुपस्थापनात्, प्रज्ञाप्ये विनयान्विते विफलताद्वेषोदयासंभवात् ॥२१॥**

**व्याख्या**—दानशीलादिषु श्राद्धस्थानेषु दीयमाने दानादाविव भक्तिकर्मणि नाद्यजिनाचार्यौ विभुः श्रीवीरजिनः निषेधे विधौ च दोषात् उभयतः पाशरज्जुस्थानीयात् मौनी स्यात् । यथाहि दानादिनिषेधेऽन्तरायभयं तद्विधाने[1] च प्राणिवधानुमतिरिति । । तत्र साधूनां मौनमेव युक्तं । "जे अ दाणं पसंसंति वहमिच्छंति पाणिणं । जे अणं पडिसेहंति वित्तिच्छेयं करेंति ते ॥१॥ दुहतो वि ते ण भासंति अत्थि वा णत्थि वा पुणो । आयंरहस्स हिच्चाणं निव्वाणं पाउणंति ते ॥२॥ " इति सूत्रकृद्वचनात् । तथा भक्तिकर्मणि अपि निषेधे भक्तिव्याघातभयं विधौ च वहुप्राणिव्यापत्तिभयमिति मौनमेवोचितमिति भावः । इतीयं गीः कुधियां कुबुद्धीनां मृषैवास्ति । कुतः ? दुष्टे दोषवति निषेधस्थितेः निषेधव्यवस्थानात् । एतदपि कुतः ? प्रतिवन्धत इति हेतोः । पुनः अन्यत्र अनभिमतत्यागानुपस्थापनात् मौनी स्यादिति हेतोः ; पुनः प्रज्ञाप्ये विनयान्विते पुरुषे विफलताद्वेषोदयासंभवात् मौनी स्यादिति हेतोः, इत्यन्वयलेशः । विस्तरार्थमाह—प्रतिवन्धतः प्रतिवन्धो व्याप्तिस्तस्मात् । प्रतिवन्धाकारश्चायं—यत्र येन दोषवज्ज्ञायते तत्तत्र तेन निषेध्यमिति निषेधार्थः । अथ दुष्टमशुद्धाहारदानं तच्च व्याख्यानशक्त्यभावेऽनुकूलप्रत्यनीकेन निषिध्यते इति व्यभिचारः । तत्राह—अन्यत्र विनाऽनभिमतो यस्त्यागस्तस्यानुपस्थापनं उपस्थापनानुकूलशक्त्यभावस्तस्मात् । तदुक्तमाचारे सप्तमस्य द्वितीये—"फासे पुट्ठो धीरो अहियासे" इत्याद्यालापके " अदुवा वयगुत्तीए गोयरस्स " इत्यादि । तर्कयित्वा पुरुषं कोऽयं पुरुष इत्यनन्यसदृशमाचक्षीत । सामर्थ्यविकलेन तु वाग्गुप्तिर्विधे-

१ दानादिविधाने.

येत्याह—अदु वा इत्यर्थः । तथा च यद्दुष्टं तच्छक्तिसत्त्वे निषिध्यत इति नियमो लभ्यते। तेनैकान्तदुष्टस्य निर्बलेन वादिनाऽनिषेधेऽपि वाग्गुप्तिसमाध्यप्रतिरोधान्न दोषः । तदुक्तं तत्रैव—"अदु वा वायाउं विउंजंति, तंजहा—अत्थि लोए णत्थि लोए " इत्याद्यालापकः, व्याख्या—अस्ति नास्ति ध्रुवाध्रुवाद्येकान्तवादीनां वादायोत्थितानां त्रयाणां त्रिषष्ट्यधिकानां प्रावादुकशतानां वादलब्धिमता विचक्षणेन प्रतिज्ञाहेतुदृष्टान्तोपन्यासेन तत्पराजयमापादयता सम्यगुत्तरं देयं। अथवा गुप्तिर्वाग्गोचरा विधेया इत्येतदहं ब्रवीमीति फलितार्थः । तेन जमालिना पृथग्विहारकर्त्तव्यतां पृष्टो भगवाँस्तद्दुष्टतां जानानोऽपि यन्न निषिद्धवान् , किं तु मौनमास्थितवान् तत्र न दोषः । अविनीते हि सत्यवचःप्रयोगोऽपि फलितोऽसत्यः, एतदाह—"अविणीयमाणवं तो किलेस्सई भासई मुसं चेव । घंटालोहं नाउं कोकडकरणे पवत्तिज्ज त्ति ॥ १ ॥" इति । तथा प्रज्ञाप्ये प्रज्ञापनीये विनयान्विते पुरुषे इत्यपि विशेषणीयं। कुतो निषेधस्य च विफलतायाश्च श्रोतुर्द्वेषोदयस्य चासंभवादिति हेतोः, प्रज्ञाप्ये विनीते सूर्याभे नाट्यकर्त्तव्यतां पृष्टवति भगवतो मौनमनुमतिमेव व्यञ्जयतीतिस्थितम् ॥ २१ ॥

अनिषेधानुमतिमेव सदृष्टान्तमुपपादयति—

**ज्ञातैः शल्यविषादिभिर्नु भरतादीनां निषिद्धा यथा, कामा नो जिनसद्मकारणविधिर्व्यक्तं निषिद्धस्तथा ।**
**तीर्थेशानुमते परानुमतेर्ऽव्यस्तवे किं ततो,नेष्टा चेज्ज्वरिणां ततः किमु सिता माधुर्यमुन्मुञ्चति ॥२२॥**

व्याख्या—नु इति निश्चये । शल्यविषादिभिर्दृष्टान्तैर्यथा भरतादीनां कामा निषिद्धाः सन्ति तथा जिनसद्मकारण-

विधिर्व्यक्त न निषिद्धोऽस्ति । श्रूयते च स आगमे–" थूभसयभाउयाणं अट्ठासीयं च जिणघरे कासी" इत्यादिना । यदि च स दुष्टः स्यात्तदा कामादिवदेव निषिध्येत । तथा–"ओसरणे बलिमाई भरहाईण न निवारियं तेण । जह तेसिं चिय कामा सल्लविसाईहिं णाएहिं ति ॥ १ ॥" एवं च तीर्थेशानुमते तीर्थकरैरनुज्ञाते द्रव्यस्तवे परानुमतेर्द्विषोऽननुमोदनात् किं स्यात् ? न किञ्चिदित्यर्थः । इदमेव प्रतिवस्तूपमया द्रढयति–चेत् यदि ज्वरिणां सिता शर्करा न इष्टा नाभिमता तत्किं माधुर्यं स्वभावसिद्धं मधुरतागुणं उन्मुञ्चति ? नैवोन्मुञ्चति, तद्वद्भगवदनुमतस्य द्रव्यस्तवस्यान्यद्वेषमात्रान्नासुन्दरत्वमिति गभार्थः ॥ २२ ॥

यत्यनुमोद्यत्वमेव द्रव्यस्तवस्य सूत्रनीत्या स्थापयन् परमाक्षिपति ।

**साधूनां वचनं च चैत्यनमनश्लाघार्चनोद्देशतः, कायोत्सर्गविधायकं ह्यनुमतिं द्रव्यस्तवस्याह यत् ।**
**तत्किं लुम्पक लुम्पतस्तव भयं दुःखौघहालाहलज्वालाजालमये भवाहिवदने पातेन नोत्पद्यते ॥२३॥**

व्याख्या—च पुनः । हि निश्चितं । साधूनां परमार्थतश्चारित्रवतां यद्वचनं कर्तृपदं द्रव्यस्तवस्य अनुमतिं अनुमोदनं आह । कीदृशं वचनं ? कायोत्सर्गविधायकं कायोत्सर्गकरणप्रतिज्ञाप्रतिपादकं । केन ? चैत्यनमनश्लाघार्चनोद्देशतः चैत्यवन्दनाद्युद्देशेन हे लुम्पक ! तद्वचनं लुम्पतस्तव भवाहिवदने संसारभुजगवक्त्रक्रोडे पातेन कृत्वा, भयं कर्तृपदं न उत्पद्यते, अयुक्तमेतत्तवेति व्यङ्ग्यं । भवाहिवदने किंभूते ? दुःखौघ एव हालाहलं तस्य यज्ज्वालाजालं विभावव्याप्तिरूपं तन्मये । सूत्रं

चेदं स्पष्टमेव-"अरिहंतचेइआणं" इत्यादि, अस्यार्थः-अर्हतां भावार्हतां चैत्यानि चित्तसमाधिजनकानि प्रतिमालक्षणानि अर्हच्चैत्यानि तेषां वन्दनादिप्रत्ययं कायोत्सर्गं करोमीति सम्बन्धः। कायोत्सर्गः स्थानमौनध्यानं विना क्रियान्तरत्यागः तं करोमि। किं निमित्तमित्याह-"वंदणवत्तिआए" इत्यादि, वन्दनं प्रशस्तमनोवाक्कायप्रवृत्तिस्तत्प्रत्ययं तन्निमित्तं, यादृग्वन्दनात् पुण्यं स्यात्तादृक्कायोत्सर्गादपि मे भवत्वित्यर्थः। "वत्तिआएत्ति" आर्षत्वात् सिद्धं। "पूअणवत्तियाए" पूजनं गन्धमालादिनाऽभ्यर्चनं तत्प्रत्ययमित्यादि ॥ २३ ॥

अथ द्रव्यस्तवस्य भक्तिहिंसोभयमिश्रत्वादेकानुमोदेन कथं नान्यानुमोदनमित्याशङ्कां निरस्यन् कविः स्वस्य प्रेक्षावत्तामाह—

**किं हिंसानुमतिर्न संयमवतां द्रव्यस्तवश्लाघये त्येतल्लुम्पकलुब्धकस्य वचनं मुग्धे मृगे वागुरा। हृद्याधाय सरागसंयम इव त्यक्ताश्रवांशाः स्थिता, ज्ञावाङ्गांशमदूषणा इति पुनस्तच्छेदशस्त्रं वचः॥२४**

व्याख्या—संयमवतां चारित्रिणां द्रव्यस्तवश्लाघया द्रव्यार्चानुमोदनया किं हिंसानुमतिर्न भवति? अपि तु भवत्येव. पश्यन्तु दयारासिका इति भावः। इत्येतत् वचनं लुम्पकलुब्धकस्य लुम्पाकमृगयोः वागुरा वन्धपाशः वर्त्तते। कस्मिन्? मुग्धे आपाततः श्रुतबाह्यधर्माचारे मृगे इति व्यस्तरूपकं मुग्धपदमनभिज्ञश्रोतर्यर्थान्तरसङ्क्रमितवाच्यमिति। य एतद्वचनं श्रुत

1. मृगयुर्व्याधस्तस्य.

वान् स मृतवानेवेति व्यङ्ग्यं । इति पुनः अस्मत्संप्रदायकानां वचो वर्त्तते । किंभूतं वचः ? तच्छेदशस्त्रं तस्य पाशस्य च्छेदे शस्त्रतुल्यं । इतीति किं ? तथा वयमदूषणाः दोषरहिताः स्थिताः स्मः । किं कृत्वा ? इह प्रक्रान्ते द्रव्यस्तवे द्रव्यभावोभयात्मके भाव एवाङ्गभूतो योऽशस्तं हृदि चित्ते आधाय स्थापयित्वा । कथंभूता वयं ? सरागसंयमे चारित्रे इव, त्यक्तः उपेक्षित आश्रवांश आश्रवभागो यैस्ते । अयं भावः—सरागसंयमेऽनुमोद्यमाने यथा रागो नानुमोद्यताकुक्षौ प्रविशति तथा द्रव्यस्तवेऽनुमोद्यमाने हिंसांशोऽपि न प्रविशति, संयमत्वेनानुमोद्यत्वे रागांशो नोपतिष्ठत एवेति द्रव्यस्तवेनानुमोद्यत्वे सुतरां हिंसानुपस्थितिरिति ॥ २४ ॥

अनुपदेश्यत्वादननुमोद्यत्वं द्रव्यस्तवस्येत्यत्राह—

**मिश्रस्यानुपदेश्यता यदि तदा श्राद्धस्य धर्मस्तथा,सर्वः स्यात्सदृशी नु दोषघटना सौत्रक्रमोल्लङ्घनात्**
**तत्सम्यग्विधिभक्तिपूर्वमुचितद्रव्यस्तवस्थापने, विघ्नो नापरमत्र लुम्पकमुखम्लानिं विना दूषणम् २५**

**व्याख्या**—यदि साधूनां मिश्रस्य द्रव्यस्तवस्य अनुपदेश्यता उपदेशाविषयता त्वया प्रतिज्ञायते[1] । मिश्रस्येति हेतुगर्भं विशेषणं मिश्रत्वादिति यावत् इति । तदा श्राद्धस्य धर्मः सर्वस्तथाऽनुपदेश्यः स्यात् । नु इति निश्चये । दोषघटना दोषसङ्गतिः सदृशी तुल्या वर्त्तते । कस्मात् ? सौत्रस्य सूत्रसिद्धस्य क्रमस्योल्लङ्घनात् उल्लङ्घनमाश्रित्य । ततः क्रमप्राप्ते उपदेशे तु न कोऽपि दोष इति । तत्तस्मात् कारणात् सम्यगवैपरीत्येन विधिभक्तिपूर्वं यथा स्यात्तथा उचितस्य द्रव्यस्तवस्य स्थापने उपदेशे वयं अपरं

१ अङ्गीक्रियते

